# अच्युताष्टकम्

अच्युतं कॆशवं रामनारायणं
कृष्णदामॊदरं वासुदॆवं हरिम् ।
श्रीधरं माधवं गॊपिका वल्लभं
जानकीनायकं रामचन्द्रं भजॆ ॥ 1 ॥

अच्युतं कॆशवं सत्यभामाधवं
माधवं श्रीधरं राधिका राधितम् ।
इन्दिरामन्दिरं चॆतसा सुन्दरं
दॆवकीनन्दनं नन्दजं सन्दधॆ ॥ 2 ॥

विष्णवॆ जिष्णवॆ शङ्कनॆ चक्रिणॆ
रुक्मिणी राहिणॆ जानकी जानयॆ ।
वल्लवी वल्लभायार्चिता यात्मनॆ
कंस विध्वंसिनॆ वंशिनॆ तॆ नमः ॥ 3 ॥

कृष्ण गॊविन्द हॆ राम नारायण
श्रीपतॆ वासुदॆवाजित श्रीनिधॆ ।
अच्युतानन्त हॆ माधवाधॊक्षज
द्वारकानायक द्रौपदीरक्षक ॥ 4 ॥

राक्षस क्षॊभितः सीतया शॊभितॊ
दण्डकारण्यभू पुण्यताकारणः ।
लक्ष्मणॊनान्वितॊ वानरैः सॆवितॊ
अगस्त्य सम्पूजितॊ राघवः पातु माम् ॥ 5 ॥

धॆनुकारिष्टकाथ_निष्टिकृद्-द्वॆषिहा
कॆशिहा कंसहृद्-वंशिकावादकः ।
पूतनाकॊपकः सूरजाखॆलनॊ
बालहॊपालकः पातु मां सर्वदा ॥ 6 ॥

बिद्युदुद्-यॊतवत्-प्रस्फुरद्-वाससं
प्रावृडम्-भॊदवत्-प्रॊल्लसद्-विग्रहम् ।
वान्यया मालया शॊभितॊरः स्थलं
लॊहिताङ्-घिद्वयं वारिजाक्षं भजॆ ॥ 7 ॥

कुञ्चितैः कुन्तलै भ्राजमानाननं
रत्नमौलिं लसत्-कुण्डलं गण्डयोः ।
हारकेयूरकं कङ्कण प्रोज्ज्वलं
किङ्किणी मञ्जुलं श्यामलं तं भजे ॥ 8 ॥

अच्युतस्याष्टकं यः पठेदिष्टदं
प्रेमतः प्रत्यहं पूरुषः सस्पृहम् ।
वृत्ततः सुन्दरं कर्तृ विश्वम्भरः
तस्य वश्यो हरि र्जायते सत्वरम् ॥

Web Url: http://www.vignanam.org/veda/achyutaashtakam-devanagari.html